# ॥ श्रीचन्द्रशेखरेन्द्रसरस्वतीस्तुती ॥

श्रुतिस्मृतिपुराणोक्तधर्ममार्गरतं गुरुम् ।
भक्तानां हितवक्तारं नमस्ते चित्तशुद्धये ॥ १॥

अद्वैतानन्दभरितं साधूनामुपकारिणम् ।
सर्वशास्त्रविदं शान्तं नमस्ते चित्तशुद्धये ॥ २॥

धर्मभक्तिज्ञानमार्गप्रचारे बद्धकङ्कणम् ।
अनुग्रहप्रदातारं नमस्ते चित्तशुद्धये ॥ ३॥

भगवत्पादपादाब्जविनिवेशितचेतसः ।
श्रीचन्द्रशेखरगुरोः प्रसादो मयि जायताम् ॥ ४॥

क्षेत्रतीर्थकथाभिज्ञः सच्चिदानन्दविग्रहः ।
चन्द्रशेखरवर्यो मे सन्निधत्ता सदा हृदि ॥ ५॥

पोषणे वेदशास्त्राणां दत्तचित्तमहर्निशम् ।
क्षेत्रयात्रारतं वन्दे सद्गुरुं चन्द्रशेखरम् ॥ ६॥

वेदज्ञान् वेदभाष्यज्ञान् कर्तुं यस्य समुद्यमः ।
गुरुर्यस्य महादेवः तं वन्दे चन्द्रशेखरम् ॥ ७॥

मणिवाचकगोदादि भक्तिवागमृतैर्भृशम् ।
बालानां भगवद्भक्तिं वर्धयंतं गुरुं भजे ॥ ८॥

लघूपदेशैर्नास्तिक्यभावमर्दन कोविदम् ।
शिवं स्मितमुखं शान्तं प्रणतोऽस्मि जगद्गुरुम् ॥ ९॥

विनयेन प्रार्थयेऽहं विद्यां बोधय मे गुरो ।
मार्गमन्यं न जानेऽहं भवन्तं शरणं गतः ॥ १०॥

इति श्री विजयेन्द्रसरस्वति रचितम् श्री चन्द्रशेखरेन्द्र
सरस्वती स्तुति सम्पूर्णम्॥